श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

# अनुबन्धम् ४

---

अस्मिन् ग्रन्थे उदाहृतानां प्राचीनविशिष्टाद्वैतिनां नामधेयानि, ग्रन्थाश्च

## नामधेयानि :—

**भगवान् बोधायनमहर्षिः** — शारीरकमीमांसासूत्राणां कृतकोटिनामक अतिविपुल - वृत्तिग्रन्थप्रणेतारः। एतेषां नामधेयं परम् अत्र संगृहीतम्। ग्रन्थस्तु श्रीभाष्ये अनेकेषु स्थलेषु उदाहृतः ॥

**टङ्काचार्याः** — छान्दोग्यस्य, तथा ब्रह्मसूत्राणां च वाक्यनामकविपुलव्याख्यानकर्तारः। एतेषां नाम, ग्रन्थश्च अत्र संगृहीतौ ॥

**द्रमिडाचार्याः** — छान्दोग्यवाक्यग्रन्थस्य, ब्रह्मसूत्राणां च परिमित - प्रौढ-गम्भीर - भाष्यप्रणेतारः। एतेषां नाम, ग्रन्थश्च अत्र समुद्धृतौ ॥

**गुहदेवः
कपर्दिः —
भारुचिः** — एते त्रयः विशिष्टाद्वैतमतानुरोधेन व्याख्यानग्रन्थप्रणेतारः। एतेषां नामधेयानि परम् अत्र संगृहीतानि। अविनीत-शिष्टाचार्यपदे च एते अभिषिक्ताः।

**भगवन्तः श्रीमद्यामुनाचार्याः** — एते भगवद्रामानुजाचार्याणां परमाचार्याः (१) आगमप्रामाण्य, (२) सिद्धित्रय, (३) चतुश्श्लोकी (४) स्तोत्र-रत्न, (५) पुरुषनिर्णयादिग्रन्थप्रणेतारः। एतेषां सुगृहीतं नाम, सिद्धि-त्रयग्रन्थश्च समुदाहृतौ ॥

---

## ग्रन्थाः :—

### वाक्यग्रन्थः

" हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत्। " (ता. टी. १४६ पु. वे. सं. ३३३ पु.)

" 'तस्मिन् यदन्तः' इति कामव्यपदेशः "। ( वे. सं. २३६ पु. )

" आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः। " ( वे. सं. २४४ पु. )

" आदित्यक्षिप्तं वा श्रीमत्त्वात्। " ( ता. द्री. ३२६ पु. )

" 'हिरण्मयः पुरुषो दृश्यते' इति प्राज्ञस्सर्वान्तरस्स्यात्, लोककामोपदेशात्, तथोदयात्पाप्मनाम्। " ( वे. सं. ३३१ पु. )

" स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्। " ( वे. सं. ३३१ पु. )

" रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षनिर्देशात्। " ( वे. सं. ३३२ पु. )

## द्रमिडभाष्यम्

" यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसा अनुधावेत्, तथाऽपि अन्तर्गुणामेव देवतां भजते इति, तत्रापि सगुणैव देवता प्राप्यते। " ( वे. सं. १८७ पु. )

" फलसंविभक्तया कर्मभिरात्मानं पिप्रीषन्ति, स प्रीतोऽलं फलाय — इति शास्त्रमर्यादा। " ( वे. सं. २९५ पु. )

" तस्य आज्ञया धावति वायुः, नद्यः स्रवन्ति, तेन कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति। " ( वे. सं. ३०४ पु. )

" तत्संकल्पनिबन्धना हि इमे लोकाः — न च्यवन्ते, न स्फुटन्ते स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवान् वर्धयेत विद्वान् कर्मदक्षः। " ( वे. सं. ३०४ पु. )

" न मयत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मनः। " ( वे. सं. ३३३ पु. )

" यथाभूतवादि हि शास्त्रम्। " ( वे. सं. ३३४ पु. )

## सिद्धित्रयम्

" उभयपरिकर्मितस्वान्तस्य ऐकान्तिकात्यन्तिक भक्तियोगलभ्यः। " ( वे. सं. १९७ पु. )



तिरुमलै तिरुपति देवस्थानमुद्राक्षरशाला, तिरुपति—१९५३.